# ॥ रेणुकास्तोत्रम् ॥

श्रीगणेशाय नमः ।
पाकामृतांशुमकुटाभरणा भवानी
शोकापहा नतजनस्य शुभाखिलाङ्गी ।
कोकाकृतिस्तनभरा कुशलानि नित्यं
मूकाम्बिका मम तनोतु मुनीन्द्रवन्द्या ॥

श्लोकस्याद्यन्तयोर्वाग्भवमुच्चार्य पठेदिति सम्प्रदायः ॥ ॐ॥

कालाग्न्यादि शिवावसानमखिलं ते गुल्फदघ्नं शिवे
मूर्तिं कीर्तयितुं न कस्य रसना लज्जाम्बुधौ मज्जति ।
तस्मात् त्वच्चरणैकदेशनखरज्योतिःस्फुलिङ्गा इव
स्फूर्जन्ति प्रभविष्णवश्च सततं ते पद्मनाभादयः ॥ १॥

कल्पः कोऽपि स शाम्भवो विजयते मातस्त्वया कल्पितो
यत्रानल्पविकल्पजालविमुखः कश्चिद्विपश्चित् परः ।
सा त्वं सत्त्ववतामपीह सुलभा नैवासि किं स्तूयसे
स्वच्छन्दं शिशवो यथा तव पुनः क्रीडन्ति वेदा इमे ॥ २॥

लीलाचामरधारिणीसहचरीगत्या महासिद्धयो
नूनं वञ्चयितुं स्फुरन्ति भवतीकारुण्यशून्यं जनम् ।
अम्ब त्वन्नयनाञ्चलं करुणया यस्मिन् परिक्रीडते
तस्य द्वारि निवारितोऽपि कुरुते सेवां सुराणां गणः ॥ ३॥

आ पातालतलात् फणीश्वरशिरोरत्नांशुनीराजिता-
दा सर्वज्ञनिकेतनादपि शिखायौतांशुधौताङ्कणात् ।
एकच्छत्रमवाप्य वैभवमहो दीव्यन्ति ते सन्ततं
ये सन्ध्याचलनिश्चलं तव पदं ध्यायन्ति गायन्ति च ॥ ४॥

ये त्वामम्ब पलाशबिल्वकुसुमैरुल्लासिभिर्मल्लिका-
पुष्पैर्वा वनमल्लिकाविरचितैरुद्दामभिर्दामभिः ।
मुग्धोन्मीलितमालतीभिरभितः सम्पूजयन्त्यादरात्
तेषामुद्धृतसौरभा प्रतिदिनं व्याजृम्भते भारती ॥ ५॥

त्वां सह्याचलमौलिसुस्थितपदां श्री-एकवीराम्बिके
ये लिम्पन्ति सचन्द्रचन्दनरसैस्तेषां सुधास्राविणी ।
वाणीविस्मयवर्ण्यमानगिरिशव्यालोलगङ्गाजल-

स्वच्छन्दोर्मिपरम्पराविजयिनी वाणी नरीनृत्यति ॥ ६॥

ये त्वां ब्राह्ममुहूर्तनिर्मलधियस्त्वाधारतश्चिन्तय-
न्त्यूर्ध्वं मूर्ध्नि सरोरुहेऽतिधवले पीयूषधारावृते ।
ते मृत्युं सहसा विजित्य रचयन्त्युच्चैर्गतिं नित्यशः
प्रत्यादिष्टपुरःसुधाकरसुधाहम्भावसम्भाविताः ॥ ७॥

यस्त्वां पश्यति तस्य नश्यति महापापान्धकारः क्षणात्
किं चार्धादपरे पुराणपुरुषप्राणप्रिये पार्वति ।
मूर्ध्नस्तस्य ततो भवेत् कृतधियः श्री-एकवीराम्बिके
दृश्यन्ते न मनागपीह यदियं प्रत्यक्षमुद्योतसे ॥ ८॥

किं योगेन किमर्चनेन किमथ ज्ञानेन किं कर्मणा
किं ध्यानेन किमिज्यया किमथवा दानेन किं दीक्षया ।
दृश्यन्ते यदि सह्यशैलशिखरश्रीगर्विताः सर्वदा
मातः पार्वति रेणुके तव पदाम्भोजप्रभाविभ्रमाः ॥ ९॥

हे सह्याचलनित्यकेलिरसिके कर्पूरकस्तूरिका-
विन्यस्तागरुकुङ्कुमैर्मलयजैस्त्वं चर्चिताभ्यर्चिता ।
ते दीव्यन्ति सुरेन्द्रमुख्यविबुधश्रेणीकिरीटस्फुर-
न्माणिक्यप्रतिबिम्बितारुणपदस्थाः सम्प्रदाः सम्पदाम् ॥ १०॥

हे सह्याद्रिविनिद्रलिङ्गवपुषि श्री-एकवीराम्बिके
त्वां कृष्णागरुगुग्गुलुप्रभृतिभिर्ये धूपयन्त्यादरात् ।
ते कैलासनिवासिनीभिरभितः सञ्चारितैश्चारुभि-
र्लीलाचामरमारुतैश्चिरतरं नन्दन्ति रुद्रा इव ॥ ११॥

मातः शाम्भवि जृम्भितामृतशिलालिङ्गात्मिके रेणुके
त्वां सह्याद्रिशिरोविहारसुलभां नीराजयन्त्यादरात् ।
ते वृन्दारकवृन्दवन्दितपदाश्चन्द्रार्कचूडामणि-
ज्योतिर्मेदुरमन्दिराङ्कणभुवो भूतिं लभन्तेऽद्भुताम् ॥ १२॥

दूरादङ्गणरङ्गसङ्गतरजोराजीविराजद्वपु-
स्तुभ्यं यः प्रणिपत्तिमम्ब कुरुते कश्चित् कदाचित् क्वचित् ।
सम्प्राप्य श्रियमिन्दुसुन्दरयशःसन्दोहनिष्यन्दिनी-
मन्ते निर्विषयं स्वयं प्रविशति श्रीशाम्भवं वैभवम् ॥ १३॥

त्वामुद्दिश्य कदापि कोऽपि किमपि क्वापि प्रपद्यन् नरो

भक्त्यावेशवशीकृतो जपति वा यो यज्जुहोत्यादरात् ।
तत् तस्याक्षयमेव देवि भवति स्वर्गापवर्गप्रदं
त्वन्नामस्मरणं गतो विजयते सर्वोऽपि शर्वो जनः ॥ १४॥

मातस्त्वच्चरणेन यास्यति चिरं रुद्रोऽपि भद्राशय-
श्चूडाचन्द्रकलामरीचिनिचयैराचान्तरत्नासनैः ।
तत्त्वानामुपरि स्थितो विजयते वामादिभिर्नामभिः
श्रीकामेश्वरि दक्षपुत्रि गिरिजे त्वं रेणुके रक्ष माम् ॥ १५॥

मातर्भैरवि भर्गपत्नि गिरिजे गायत्रि गोत्रात्मिके
दुर्गे गौरि सरस्वति त्रिणयने श्रीसिद्धलक्ष्मी धृते ।
नित्ये मृत्युविकारहारिणि शिवे श्री-एकवीराम्बिके
सोऽहं ते शरणागतः करुणया त्वं रेणुके रक्ष माम् ॥ १६॥

इति श्रीरेणुकास्तोत्रं समाप्तः ॥

पाकामृतांशुमकुटाभरणा भवानी
शोकापहा नतजनस्य शुभाखिलाङ्गी ।
कोकाकृतिस्तनभरा कुशलानि नित्यं
मूकाम्बिका मम तनोतु मुनीन्द्रवन्द्या ॥

श्लोकस्याद्यन्तयोर्वाग्भवमुच्चार्य पठेदिति सम्प्रदायः ॥ ॐ॥

॥ आगमरहस्ये रेणुकास्तोत्रम् ॥

श्रीगणेशाय नमः ।
श्रीरेणुकायै नमः ।

भैरवी उवाच

देव देव महेशान महादेव दयानिधे ।
यत्वया पठ्यते नाथ रेणुकास्तोत्रमुत्तमम् ॥

ह्रीं रेणुकायै विद्महे राममात्रे च धीमहि । तन्नो गौरी प्रचोदयात् ॥

इति श्रीरेणुकागायत्रीमन्त्रः ।

तदहं श्रोतुमिच्छामि सर्वकामसमृद्धिदम् ।
सर्वार्थसाधकं दिव्यं साधकनां सुखावहम् ॥

महाभैरव उवाच

शृणु देवि प्रवक्ष्यामि रेणुका स्तोत्रमुत्तमम् ।
यस्य स्मरणमात्रेण सर्वान् कामानवाप्नुयात् ॥

स्तोत्रस्यास्य ऋषिः सोऽहं छन्दोऽनुष्टुप्प्रकीर्तितम् ।
देवता तु पराशक्तिः रेणुका जगदम्बिका ॥

न्यासं जालं तथा ध्यानं मूलमन्त्रेण वै चरेत् ।

ध्यानम्

मध्ये बद्धमयूरपिच्छनिकरां श्यामां प्रबालाधरां
गुञ्जाहारधरां धनुष्शरकरां नीलाम्बराम्बराम् ।
शृङ्गीवादनतत्परां सुनयनां मूर्द्धालकैर्बर्बरां
भिल्लीवेषधरां नमामि शबरीं त्वामेकवीरां पराम् ॥

मानसे  योनिमुद्रां प्रदर्श्य  /-/-

ॐ ह्रीङ्काररूपिणी देवी रेणुका सुखदायिनी ।
क्लीङ्काररूपिणी श्रद्धा सिद्धिसौभाग्यदायिनी ॥

वाग्भवा कामरूपा च कामकल्लोलमालिनी ।
षड्बीजा च त्रिबीजा च नवबीजा न वा नवा ॥

नवभैरवपूज्या च नवमी नव वल्लभा ।
नमस्तस्यै नमस्तस्यै रेणुकायै नमो नमः ॥

चैतन्यरूपिणी विद्या निर्गुणा गुणपारगा ।
नमस्तस्यै नमस्तस्यै रेणुकायै नमो नमः ॥

प्रपञ्चरहिता पृथ्वी लक्षणातीतविग्रहा ।
नमस्तस्यै नमस्तस्यै रेणुकायै नमो नमः ॥

या कामधेनुः सकलार्थदात्री सर्वेश्वरी सर्वभयापहन्त्री ।
या सच्चिदानन्दकरी जनानां सा रेणुका पातु निरन्तरं माम् ॥

या राममाता रमणीयरूपा रमाधवाद्यैरभिपूजिताङ्घ्रिः ।
नित्योत्सवा निर्जरवन्दिता च सा रेणुका पातु निरन्तरं माम् ॥

या कालरात्रिः कलिकल्मषघ्नी कल्याणशैलामलवासवासा ।
योगेश्वराराधितपादपद्मा सा रेणुका पातु निरन्तरं माम् ॥

या भर्गपत्नी भवरोगहन्त्री भक्तेश्वरी भक्तजनाभिनन्दिनी ।
भव्या भवानी भवपूजिता या सा रेणुका पातु निरन्तरं माम् ॥

या एकलाऽनेकशरीरधारिणी दिव्याम्बरा दिव्यसुरत्वपूजिता ।
शिवाऽपरा सर्वसुखैकभूमिदा सा रेणुका पातु निरन्तरं माम् ॥

नमस्ते राममात्रे ते नमः कल्याणदायिनी ।
नमः सकलसङ्घात्र्यै रेणुकायै नमोऽस्तु ते ॥

ब्रह्मरूपे नमस्तेऽस्तु नमस्ते शिवरूपिणी ।
विष्नुरूपे नमस्तेऽस्तु रेणुकायै नमोऽस्तु ते ॥

सर्वशक्त्यै नमस्तेऽस्तु सर्वव्यापिणि सर्वदा ।
सर्वार्थसाधिके नित्यं रेणुकायै नमोऽस्तु ते ॥

नमो नमस्ते भैरव्यै भवभीतिनिवारिणी ।
भवान्यै भक्तवश्यायै रेणुकायै नमोऽस्तु ते ॥

विश्वाधारे विश्वमये विश्वेश्वरविलासिनी ।
विश्वम्भरि विशालाक्षि रेणुकायै नमोऽस्तु ते ॥

कमले कमलावासे कमलोद्भवपूजिते ।
कामदे कामवरदे रेणुकायै नमोऽस्तु ते ॥

विश्वबीजे विराटायै विरजाम्बरधारिणि ।
यन्त्रेश्वरि महामाये रेणुकायै नमोऽस्तु ते ॥

निखिलनिगमगीते शम्भुवामाङ्कसंस्थे
शरणजनसुतारे तारमन्त्रादिरूढे ।
सुरवरमुनिवर्यैः पूजिते पात्रहस्ते
परमसुखसुखाब्धे रेणुके त्वं प्रसीद ॥

भैरव उवाच

रेणुकास्तोत्रमेतत्ते कथितं भुवनेश्वरि ।
सर्वकामप्रदं नृणां सर्वारिष्टविनाशकृत् ॥

सर्वाभीष्टकरं दिव्यं पठनीयं प्रयत्नतः ।
इत्यागमरहस्ये वै भैरवेण समीरितम् ॥

इति श्र्यागमरहस्ये भैरवप्रोक्तं रेणुकस्तोत्रं सम्पूर्णम् ॥

अथ श्रीरेणुकामन्त्रः

अस्य श्रीरेणुकामन्त्रस्य श्रीरुद्र ऋषिः श्रीरेणुकादेवी देवता विराट् छन्दः क्लीं बीजं श्रीरेणुकादेवी शक्तिः क्लीं कीलकं ममाभीष्टसिद्धये जपे विनियोगः ॥

ध्यानम्

प्रफुल्लहारकेयूरकुण्डलादि विराजिताम् ।
प्रसन्नवदनां शान्तां श्रीदेवीं रेणुकां भजे ॥

मन्त्रः

१। क्लीं क्लीं क्लीं रेणुकादेव्यै नमः ।
२। क्लीं क्लीं क्लीं स्वाहा ।
३। क्लीं रेणुकायै स्वाहा ।

ध्यानम्

लोलल्यालिलसत्प्रफुल्लसुमनो जालोल्लसत्कानने
भिल्लीवेषमनङ्गवेगजनकं धृत्वा चलन्ती शनैः ।
लोलापाङ्गतरङ्गरङ्गसुदृशा सम्मोहयन्ती शिवं
चञ्चच्चञ्चलनूपुरध्वनियुता वर्वर्ति सर्वार्थदा ॥

॥ इति ॥

॥ रेणुकास्तोत्रं श्रीवायुपुराणे श्रीपरशुरामकृतम् ॥

श्रीगणेशाय नमः ।
श्रीसरस्वत्यै नमः ।
श्रीगुरुभ्यो नमः ।
श्रीरेणुकाम्बायै  नमः ।
ॐ नमः परमानन्दे सर्वदेवमयी शुभे ।
अकारादि-क्षकारान्तं मातृका मन्त्रमालिनी ॥ १॥

एकवीरे एकरूपे महारूपे अरूपिणि ।
अव्यक्ते व्यक्तिमापन्ने गुणातीते गुणात्मिके ॥ २॥

कमले कमलाभासे हृत्सच्चित्तरणिकालये ।
नाभिचक्रस्थिते देवि कुण्डली तन्तुरूपिणि ॥ ३॥

वीरमाता वीरबन्धा योगिनी समरप्रिये ।
वेदमाता वेदगर्भे विश्वगर्भे नमोऽस्तु ते ॥ ४ ॥

राममातर्नमस्तुभ्यं नमस्त्रैलोक्यरूपिणि ।
मह्यादिके पञ्चभूता जमदग्निप्रिये शुभे ॥ ५ ॥

यैस्तु भक्त्या स्तुता ध्याता अर्चयित्वाऽर्पिते शुभे ।
भोगमोक्षप्रदे देवि कामेश्वरि नमोऽस्तु ते ॥ ६॥

नमोऽस्तु ते निरालम्बे परमानन्दविग्रहे ।
पञ्चभूतात्मिके देवि भूतभावविवर्जिते ॥ ७॥

महारौद्रे महाकाये सृष्टिसंहारकारिणि ।
ब्रह्माण्डगोलकाकारे विश्वरूपे नमोऽस्तु ते ॥ ८॥

चतुर्भुजे खड्गहस्ते महाडमरुधारिणि ।
शिरःपात्रधरे देवि एकवीरे नमोऽस्तु ते ॥ ९॥

नीलाम्बरे नीलवर्णे मयूरपिच्छधारिणि ।
वनभिल्लधनुर्वामे दक्षिणे बाणधारिणि ॥ १०॥

रौद्रकाये महाकाये सहस्रार्जुनभञ्जनि ।
एकं शिरः पुरा स्थित्वा रक्तपात्रे च पूरितम् ॥ ११॥

मृतधारा पिबन्देवि रुधिरं दैत्यदेहजम् ।
रक्तवर्णे रक्तदन्ते खड्गलाङ्गलधारिणि ॥ १२॥

वामहस्ते च खट्वाङ्गं डमरुं चैव दक्षिणे ।
प्रेतवाहनके देवि-ऋषिपत्नी च देवते ॥ १३॥

एकवीरे महारौद्रे मालिनी विश्वभैरवि ।
योगिनी योगयुक्ता च महादेवी महेश्वरी ॥ १४॥

कामाक्षी भद्रकाली च हुङ्कारी त्रिपुरेश्वरी ।
रक्तवस्त्रे रक्तनेत्रे महात्रिपुरसुन्दरि ॥ १५॥

रेणुका सूनुयोगी च भक्तानामभयङ्करी ।
भोगलक्ष्मीर्योगलक्ष्मीर्दिव्यलक्ष्मीश्च सर्वदा ॥ १६॥

कालरात्रि महारात्रि मद्यमांसशिवप्रिये ।
भक्तानां श्रीपदे देवि लोकत्रयविमोहिनि ॥ १७॥

क्लीङ्कारी कामपीठे च ह्रीङ्कारी च प्रबोध्यता ।
श्रीङ्कारी च श्रिया देवि सिद्धलक्ष्मीश्च सुप्रभा ॥ १८॥

महालक्ष्मीश्च कौमारी कौबेरी सिंहवाहिनी ।
सिंहप्रेतासने देवि रौद्रि क्रूरावतारिणि ॥ १९॥

दैत्या नारी कुमारी च रौद्रदैत्यनिपातिनी ।
त्रिनेत्रा श्वेतरूपा च सूर्यकोटिसमप्रभा ॥ २०॥

खड्गिनी बाणहस्ता चारूढा महिषवाहिनी ।
महाकुण्डलिनी साक्षात् कङ्काली भुवनेश्वरी ॥ २१॥

कृत्तिवासा विष्णुरूपा हृदया देवतामया ।
देवमारुतमाता च भक्तमाता च शङ्करी ॥ २२॥

चतुर्भुजे चतुर्वक्त्रे स्वस्तिपद्मासनस्थिते ।
पञ्चवक्त्रा महागङ्गा गौरी शङ्करवल्लभा ॥ २३॥

कपालिनी देवमाता कामधेनुस्त्रयोगुणी ।

विद्या एकमहाविद्या श्मशानप्रेतवासिनी ॥ २४॥

देवत्रिगुणत्रैलोक्या जगत्त्रयविलोकिनी ।
रौद्रा वैतालि कङ्काली भवानी भववल्लभा ॥ २५॥

काली कपालिनी क्रोधा मातङ्गी वेणुधारिणी ।
रुद्रस्य न पराभूता रुद्रदेहार्द्धधारिणी ॥ २६॥

जया च विजया चैव अजया चापराजिता ।
रेणुकायै नमस्तेऽस्तु सिद्धदेव्यै नमो नमः ॥ २७॥

श्रियै देव्यै नमस्तेऽस्तु दीननाथे नमो नमः ।
जय त्वं देवदेवेशि सर्वदेवि नमोऽस्तु ते ॥ २८॥

देवदेवस्य जननि पञ्चप्राणप्रपूरिते ।
त्वत्प्रसादाय देवेशि देवाः क्रन्दन्ति विष्णवे ॥ २९॥

महाबले महारौद्रे सर्वदैत्यनिपातिनि ।
आधारा बुद्धिदा शक्तिः कुण्डली तन्तुरूपिणी ॥ ३०॥

षट्चक्रमणे देवि योगिनि दिव्यरूपिणि ।
कामिका कामरक्ता च लोकत्रयविलोकिनी ॥ ३१॥

महानिद्रा मद्यनिद्रा मधुकैटभभञ्जिनी ।
भद्रकाली त्रिसन्ध्या च महाकाली कपालिनी ॥ ३२॥

रक्षिता सर्वभूतानां दैत्यानां च क्षयङ्करी ।
शरण्यं सर्वसत्त्वानां रक्ष त्वं परमेश्वरि ॥ ३३॥

त्वामाराधयते लोके तेषां राज्यं च भूतले ।
आषाढे कार्तिके चैव पूर्णे पूर्णचतुर्दशी ॥ ३४॥

आश्विने पौषमासे च कृत्वा पूजां प्रयत्नतः ।
गन्धपुष्पैश्च नैवेद्यैस्तोषितां पञ्चभिः सह ॥ ३५॥

यं यं प्रार्थयते नित्यं तं तं प्राप्नोति निश्चितम् ।
तत्त्वं मे वरदे देवि रक्ष मां परमेश्वरि ॥ ३६॥

तव वामाङ्कितं देवि रक्ष मे सकलेश्वरि ।
सर्वभूतोदये देवि प्रसाद वरदे शिवे ॥ ३७॥

श्रीदेव्युवाच
वरं ब्रूहि महाभाग राज्यं कुरु महीतले ।
मामाराध्यते लोके भयं क्वापि न विद्यते ॥ ३८॥

मम मार्गे च आयान्ती भीर्देवी मम सन्निधौ ।
अभार्यो लभते भार्यां निर्धनो लभते धनम् ॥ ३९॥

विद्यां पुत्रमवाप्नोति शत्रुनाशं च विन्दति ।
अपुत्रो लभते पुत्रान् बद्धो मुच्येत बन्धनात् ॥ ४०॥

कामार्थी लभते कामं रोगी आरोग्यमाप्नुयात् ।
मम आराधनं नित्यं राज्यं प्राप्नोति भूतले ॥ ४१॥

सर्वकार्याणि सिध्यन्ति प्रसादान्मे न संशयः ।
सर्वकार्याण्यवाप्नोति दीर्घायुश्च लभेत्सुखी ॥ ४२॥

श्रीपरशुराम उवाच
अत्र स्थानेषु भवतां अभयं कुरु सर्वदा ।
यं यं प्रार्थयते नित्यं तं तं प्राप्नोति निश्चितम् ॥ ४३॥

प्रयागे पुष्करे चैव गङ्गासागरसङ्गमे ।
स्नानं च कुरुते नित्यं नित्यं च चरणोदके ॥ ४४॥

इदं स्तोत्रं पठेन्नित्यं त्रिसन्ध्यं श्रद्धयान्वितः ।
सर्वान् कामानवाप्नोति प्राप्यते परमं पदम् ॥ ४५॥

इति श्रीवायुपुराणे परशुरामकृतं श्रीरेणुकास्तोत्रं सम्पूर्णम् ॥

॥ श्रीरेणुकार्पणमस्तु ॥

॥ रेणुकास्तोत्रं श्रीवासुदेवानन्दसरस्वतीकृतम् ॥

श्रीगणेशाय नमः ।

ऐन्द्र्यादिवन्दितपते वरदेऽभीष्टकामदे ।
कामदेवर्चितेऽनन्ते रेणुकेऽम्ब नमोऽस्तु ते ॥

एकवीरे निजाधारे रुचिरे सज्जनादरे ।
उदरे रेणुसञ्जाते रेणुकेऽम्ब नमोऽस्तु ते ॥

करुणारससम्पूर्णे नयने सुस्मितानने ।
शोभने पाहि नो भीते रेणुकेऽम्ब नमोऽस्तु ते ॥

वीरमातर्महादेवी त्वदन्या का परा भुवि ।
तारिणीदुर्गतोऽनन्ते रेणुकेऽम्ब नमोऽस्तु ते ॥

राममातर्महामाये जमदग्निप्रियाऽभये ।
विजये वेदविनुते रेणुकेऽम्ब नमोऽस्तु ते ॥

यैरर्चिते तव पदे ते धन्याः परमे पदे ।
निहितास्ते सुरनुते रेणुकेऽम्ब नमोऽस्तु ते ॥

न त्वदन्यागतिर्देवि परमा खलु शाम्भवि ।
भुक्तिमुक्तिप्रदे शान्ते रेणुकेऽम्ब नमोऽस्तु ते ॥

यः केशवेश्वरश्चापि सृष्टि-स्थित्यन्तकारिणः ।
प्रसादादेव तेऽनन्ते रेणुकेऽम्ब नमोऽस्तु ते ॥

जगदम्बे नमोऽस्तु रेणुके परिपाहीश्वरि  नः सुभावुके ।
जय-लाभ-यशःप्रदे मुदे स्तुतिरेषास्तु तवाखिलार्थदे ॥

नावाहनं नार्चन पद्धतिं ते
जाने न भक्तिं त्वयि मे भवान्तके ।
अथापि मां त्वं कुलदेविभक्तं
कुलोद्भवं पाह्यपि चार्थसक्तम् ॥

मातापुरनिवासिन्याः श्रीदेव्याः स्तोत्रमुत्तमम् ।
यः पठेत्प्रयतो भक्त्या सर्वान् कामान् स आप्नुयात् ॥

इति श्रीवासुदेवानन्दसरस्वतीपण्डितविरचितं श्रीरेणुकास्तोत्रं सम्पूर्णम् ॥

॥ रेणुकास्तोत्रं श्रीविनायकशास्त्रिकृतम् ॥

श्रीगणेशाय नमः ।

त्वदीयपदरेणुके शिरसि मामके रेणुके
निधाय वरदं करं ननुदरं ममाऽनीनशः ।
स्ववत्सलतयाऽनुदोर्नयनलालनच्छद्मना
प्रमोदभर-दृग्झर-स्तुतमदश्रुभिर्धावये ॥

प्रणम्य सुषमामिषद् दृग्निमेषशीर्सोल्लसत्-
किरीटकुलसङ्कुलं परिमलाऽलमङ्घ्र्युत्पलम् ।
मनोलिरयमुमदः सपदि तेऽनुजिघ्रन्मनाक्
तदन्यसुमनस्सु किं व्रजति नाधुना तत्स्मरन् ॥

भजन्तु विषयान् सजूर्विषयिणो विषाणीवते
रसारसिकमौलिना मम मनोऽलिनान्यक्कृताः ।
श्रुतं तदवलोकितं भवतु तत्स्पृशन् जिघ्रता
रसालपदपङ्कजं जननि ते सदा स्वाद्यताम् ॥

विजित्य हृदुपस्थितो मुहुरुपस्थितानन्दकम्
विशुद्धिमुपसंहरन्  विरमताभवद्भक्तिषु ।
गिरा भजतु नाम ते करघृतार्चनोपस्करम्
प्रयातु तव मन्दिरं विसृजतु त्वदन्यादरम् ॥

मुमोच किल मां प्रसूः रथविदग्रणीरग्रजा
पिताऽपि दयितोऽग्रजः पर इहाश्रयो यस्य मे ।
श्रयेऽहमधुनेहकं   व्रजिन (ब्रजिन) पुञ्जवाक्याहतः
प्रयामि दिशमम्बिके निदिश कान्दिशिकोऽद्यकाम् ॥

यथायथमनुष्ठिताः स्तुतिकथाः कथञ्चिन्नमते
स्मरामि च कृतं न ते तेऽर्चनमकिञ्चनः किञ्चनः ।
तपोमनुजपोऽप्युपोषणकारि न त्वत्कृते-
ऽपराद्धममुमम्बिके ! वद किमुद्धरिष्यस्यतः ॥

विधिर्हरिहरादयो यदवधीरिता नान्तिके
पुरन्दरपुरोगमा न पुर  आसितुं शक्नुयुः ।
निगृह्य कृपयाऽमिके ! गुणगणैः स्वकीयैर्दृढम्
बधान न यथा पुनः श्रयति हृत्पशुः शोच्यताम् ॥

अगाध वदपारद्रुम-मदादियदो युता
विवेकमुखमत्सखाऽप्युदधिवीचिमग्नाः परम् ।
निधाय चरणौ पुरो नियमयाऽऽशु तृष्णा नदी
विनश्यति यथाऽम्बिके! न परमार्थ-मार्गो मम ॥

स्तवीमि जमदग्निसद्गृहिणि नाम पृथ्वीगतां
गृणन् परशुराम-सज्जननि ! जल्पितात्सर्थये ।
तदम्ब ! कृपयाऽऽप्स्यतेऽद्य वयसो न पञ्चाशताः
मयापद्धति कोऽपि चेत्सफलमाप्नुयात्तादृशम् ॥

इति श्रीमत्पूज्यपादविनायकशास्त्रिवेतालविरचितं
श्रीरेणुकास्तोत्रं सम्पूर्णम् ॥

॥ रेणुकास्तोत्रं श्रीधरस्वामिकृतम् ॥

श्रीगणेशाय नमः ।

शिवां शान्तरूपां मनोवागतीतां
निजानन्दपूर्णां सदाऽद्वैतरूपाम् ।
परां वेदगम्यां परब्रह्मरूपां
भजे रेणुकां सर्वलौकैकवेद्याम्  ॥ १॥

सदाचारसद्भक्तिबोधादिभिर्या
गुरोरङ्घ्रिशुश्रूषयां मुख्यवृत्त्या ।
सुवेद्या सुलभ्या परानन्दपूर्णा
भजे रेणुकां तां विमोहप्रशान्त्यै ॥ २॥

श्रुतिर्नेतिनेतीति सर्वं निरस्य
वदत्येकमाद्यं विभुं चित्सुखं यत् ।
तदेवावशिष्टं स्वरूपं विशुद्धं
भजे रेणुकां तां सदा मृत्युहीनाम् ॥ ३॥

यदानन्दसिन्धौ निमग्नो न पश्येद्-
अहो कर्मजालं फलं वा तदीयम् ।
न जैवं न शैवं जगन्नैव मायां
चिदेकस्वरूपां भजे रेणुकां ताम् ॥ ४॥

अनेकान्तिकां सर्वभेदातिरूपां
तमोऽज्ञानदुःखातिगां शुद्धरूपाम् ।
सदाऽध्यात्मविद्याप्रदानैकशीलं
भजे रेणुकां मुक्तिसौख्याधिदेवीम् ॥ ५॥

त्रितापप्रशन्त्यै समाराध्यमानां
सदा जीवलोके स्वसौख्यप्रदात्रीम् ।
भवोम्बोधिसेतुं चिदानन्दकन्दां
भजे रेणुकां ज्ञानमुद्रैकलक्ष्याम् ॥ ६॥

सदा भक्तहृत्कौमुदीं भद्रभद्रां
सदोङ्कारवाच्यां वरेण्यां शरण्याम् ।
स्वभक्तार्तिनाशां शुभाङ्गां गुणाढ्यां
भजे रेणुकां भक्तसौख्याब्धिरूपाम् ॥ ७॥

सदा भक्तवात्सल्यपूर्णां सुरम्यां
सुरेन्द्रादिभिः स्तूयमानां सुषूक्तैः ।
सदा भक्तवृन्दैश्च संसेव्यमानां
भजे रेणुकां भक्तभाग्यां भवानीम् ॥ ८॥

पठेद्यः सदा भक्तियुतो विशुद्धः
स्ववर्णाश्रमाचारतो नित्ययुक्तः ।
स मुक्तः कृती रेणुकायाः प्रसादात्
सदा राजते राजते लोकपूज्या ॥ ९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यसद्गुरुभगवता श्रीधरस्वामिना
विरचितं श्रीरेणुकास्तोत्रं सम्पूर्णम् ॥

॥ रेणुकास्तोत्रम् श्रीमातापुरनिवासिनी ॥

श्रीगणेशाय नमः ।

नमस्तेऽस्तु ते महादेवि शिवे कल्याणशाम्भवि ।
प्रसीद वेदविनुते  जगदम्ब नमोऽस्तु ते ॥ १॥

जगतामादिभूता त्वं जगत्त्वं जगदाश्रया ।
एकाऽप्यनेकरूपाऽसि जगदम्ब नमोऽस्तु ते ॥ २॥

सृष्टिस्थिते विनाशानां  हेतुभूते मुनिस्तुते ।
प्रसीद देवविनुते जगदम्ब नमोऽस्तु ते ॥ ३॥

सर्वेश्वरि नमस्तुभ्यं सर्वसौभाग्यदायिनि ।
सर्वशक्तियुतेऽनन्ते जगदम्ब नमोऽस्तु ते ॥ ४॥

विविधारिष्टशमनि त्रिविधोत्पातनाशिनि ।
प्रसीद देवि ललिते जगदम्ब नमोऽस्तु ते ॥ ५॥

प्रसीद करुणासिन्धो त्वत्तः कारुणिका परा ।
यतो नास्ति महादेवि जगदम्ब नमोऽस्तु ते ॥ ६॥

शत्रूञ्जहि जयं देहि सर्वान् कामांश्च देहि मे ।
भयं नाशय रोगांश्च जगदम्ब नमोऽस्तु ते ॥ ७॥

जगदम्ब नमोऽस्तु ते हिते जय शम्भोर्दयिते महामते ।
कुलदेवि नमोऽस्तु ते सदा हृदि मे तिष्ठ यतोऽसि सर्वदा ॥ ८॥

मातापुरनिवासिन्याः देव्याः स्तोत्रमिदं परम् ।
यः पठेत्प्रयतो भक्त्या सर्वान् कामान् स आप्नुयात् ॥ ९॥

इति श्रीवासुदेवानन्दसरस्वतीपण्डितविरचितं
श्रीमातपुरवासिन्याः देव्याः स्तोत्रं सम्पूर्णम् ॥